॥ महामहिमान्वितं आदित्यस्तोत्रम् ॥

अथ श्रीमदप्पय्यदीक्षितविरचितं महामहिमान्वितं आदित्यस्तोत्रम् ॥

विस्तारायाममानं दशभिरुपगतो योजनानां सहस्रैः
चक्रे पञ्चारनाभित्रितयवति लसन् नेमिषट्के निविष्टः ।
सप्तच्छन्दस्तुरङ्गाहितवहनधुरो हायनांशत्रिवर्ग
व्यक्ताक्लृप्ताखिलाङ्गः स्फुरतु मम पुरः स्यन्दनश्चण्डभानोः ॥ १॥

आदित्यैरप्सरोभिर्मुनिभिरहिवरैर्ग्रामणीयातुधानैः
गन्धर्वैर्वालखिल्यैः परिवृतदशमांशस्य कृत्स्नं रथस्य ।
मध्यं व्याप्याधितिष्ठन् मणिरिव नभसो मण्डलश्चण्डरश्मेः
ब्रह्मज्योतिर्विवर्तः श्रुतिनिकरघनीभावरूपः समिन्धे ॥ २॥

निर्गच्छन्तोऽर्कबिम्बान् निखिलजनिभृतां हार्दनाडीप्रविष्टाः
नाड्यो वस्वादिबृन्दारकगणमधुनस्तस्य नानादिगुत्थाः ।
वर्षन्तस्तोयमुष्णं तुहिनमपि जलान्यापिबन्तः समन्तात्
पित्रादीनां स्वधौषध्यमृतरसकृतो भान्ति कान्तिप्ररोहाः॥ ३॥

श्रेष्ठास्तेषां सहस्रे त्रिदिववसुधयोः पञ्चदिग्व्याप्तिभाजां
शुभ्रांशुं तारकौघं शशितनयमुखान् पञ्च चोद्भासयन्तः ।
आरोगो भ्राजमुख्यास्त्रिभुवनदहने सप्तसूर्या भवन्तः
सर्वान् व्याधीन् सुषुम्नाप्रभृतय इह मे सूर्यपादाः क्षिपन्तु ॥ ४॥

आदित्यानाश्रिताः षण्णवतिगुणसहस्रान्विता रश्मयोऽन्ये
मासे मासे विभक्तास्त्रिभुवनभवनं पावयन्तः स्फुरन्ति ।
येषां भुव्यप्रचारे जगदवनकृतां सप्तरश्म्युत्थितानां
संसर्पे चाधिमासे व्रतयजनमुखाः सत्क्रियाः न क्रियन्ते ॥ ५॥

आदित्यं मण्डलान्तःस्फुरदरुणवपुस्तेजसा व्याप्तविश्वं
प्रातर्मध्याह्नसायं समयविभजनादृग्यजुस्सामसेव्यम् ।
प्राप्यं च प्रापकं च प्रथितमतिपथिज्ञानिनामुत्तरस्मिन्
साक्षाद् ब्रह्मेत्युपास्यं सकलभयहराभ्युद्गमं संश्रयामि ॥ ६॥

यच्छक्त्याऽधिष्ठितानां तपनहिमजलोत्सर्जनादिर्जगत्याम्
आदित्यानामशेषः प्रभवति नियतः स्वस्वमासाधिकारः ।
यत् प्राधान्यं व्यनक्ति स्वयमपि भगवान् द्वादशस्तेषु भूत्वा
तं त्रैलोक्यस्य मूलं प्रणमत परमं दैवतं सप्तसप्तिम् ॥ ७॥

स्वःस्त्रीगन्धर्वयक्षा मुनिवरभुजगा यातुधानाश्च नित्यं
नृत्तैर्गीतैरभीशुग्रहनुतिवहनैरग्रतः सेवया च ।
यस्य प्रीतिं वितन्वन्त्यमितपरिकरा द्वादश द्वादशैते
हृद्याभिर्वालखिल्याः सरणिभणितिभिस्तं भजे लोकबन्धुम् ॥ ८॥

ब्रह्माण्डे यस्य जन्मोदितमुषसि परब्रह्ममुख्यात्मजस्य
ध्येयं रूपं शिरोदोश्चरणपदजुषा व्याहृतीनां त्रयेण ।
तत् सत्यं ब्रह्म पश्याम्यहरहमभिधं नित्यमादित्यरूपं
भूतानां भूनभस्स्वः प्रभृतिषु वसतां प्राणसूक्ष्मांशमेकम् ॥ ९॥

आदित्ये लोकचक्षुष्यवहितमनसां योगिनां दृश्यमन्तः
स्वच्छस्वर्णाभमूर्तिं विदलितनलिनोदारदृश्याक्षियुग्मम् ।
ऋक्सामोद्गानगेष्णं निरतिशयलसल्लोककामेशभावं
सर्वावद्योदितत्वादुदितसमुदितं ब्रह्म शम्भुं प्रपद्ये ॥ १०॥

ओमित्युद्गीथभक्तेरवयवपदवीं प्राप्तवत्यक्षरेऽस्मिन्
यस्योपास्तिः समस्तं दुरितमपनयत्वर्कबिम्बे स्थितस्य ।
यत् पूजैकप्रधानान्यघमखिलमपि घ्नन्ति कृच्छ्रव्रतानि
ध्यातः सर्वोपतापान् हरतु परशिवः सोऽयमाद्यो भिषङ्नः ॥ ११॥

आदित्ये मण्डलार्चिः पुरुषविभिदयाद्यन्तमध्यागमात्म-
न्यागोपालाङ्गनाभ्यो नयनपथजुषा ज्योतिषा दीप्यमानम्
गायत्रीमन्त्रसेव्यं निखिलजनधियां प्रेरकं विश्वरूपम् ।
नीलग्रीवं त्रिने(णे)त्रं शिवमनिशमुमावल्लभं संश्रयामि ॥ १२॥

अभ्राकल्पः शताङ्गः स्थिरफणितिमयं मण्डलं रश्मिभेदाः
साहस्रास्तेषु सप्त श्रुतिभिरभिहिताः किञ्चिदूनाश्च लक्षाः ।
एकैकेषां चतस्रस्तदनु दिनमणेरादिदेवस्य तिस्रः
क्लृप्ताः तत्तत्प्रभावप्रकटनमहिताः स्रग्धरा द्वादशैताः ॥ १३॥

दुःस्वप्नं दुर्निमित्तं दुरितमखिलमप्यामयानप्यसाध्यान्
दोषान् दुःस्थानसंस्थग्रहगणजनितान् दुष्टभूतान् ग्रहादीन् ।
निर्धूनोति स्थिरां च श्रियमिह लभते मुक्तिमभ्येति चान्ते
सङ्कीर्त्य स्तोत्ररत्नं सकृदपि मनुजः प्रत्यहं पत्युरह्नाम् ॥ १४॥

॥ इति श्रीमदप्पय्यदीक्षितविरचितश्रीमदादित्यस्तोत्ररत्नम् ॥